।।ॐ श्रीगणेशाय नमः।।

# लघुसिद्धान्तकौमुदी

## (वटुकतोषणीटिप्पणसंग्रहः)

टिप्पणसंग्रहकर्ता

**स्वामी शान्तिधर्मानन्द सरस्वती**

**सत्यं साधना कुटीर**

वार्ड नं 3, डाक: कैलास गेट, मुनि की रेती, ऋषीकेश,

तह: नरेन्द्रनगर, जिला: टिहरी गढ़वाल, उत्तराखण्ड 249137.

चल दूरभाष् : 9557130251, www.satyamsadhana.org

youtube and archive : satyamsadhanakutir

| | स्वा. शान्तिधर्मानन्द सरस्वतीजी के डी वि डी | मूल्य |
|---|---|---|
| 1 | लघुसिद्धान्तकौमुदी, अर्थसंग्रह, सांख्यकारिका, तर्कसंग्रह | 25 |
| 2 | वेदान्तपरिभाषा, योगसूत्र, मानमेयोदय, मानमनोहर, तर्कभाषा, शिवसूत्र | 25 |
| 3 | ब्रह्मसूत्रं, 1 भगवद्गीता 1-8 | 25 |
| 4 | 1 भगवद्गीता 9-10, 1 ईश से छान्दोग्य 1-5 | 25 |
| 5 | छान्दोग्य 6-8 व बृहदारण्यक, 2 भगवद्गीता 1-6 | 25 |
| 6 | 2 भगवद्गीता 7-18, 2 ईश से मुण्डक तक | 25 |
| 7 | 2 माण्डूक्य से ऐतरेय तक व अंग्रेजी में छान्दोग्य से बृहदारण्यक 1-5 तक | 25 |
| 8 | श्रीमद्भागवतम् 1-23 | 25 |
| 9 | श्रीमद्भागवतम् 24-34, | 25 |
| 10 | भागवतकथा-पराशरजी, आदि; पंचदशी, सिद्धान्तबिन्दु व शिवदृष्टि: 1-7 | 25 |
| 11 | शिवदृष्टिः 8, प्रवचनसंग्रहः, उपदेशसाहस्री, त्रिपुरोपनिषद्, षड्दर्शनसूत्रपाठः, | 25 |
| 12 | सिद्धान्त कौमुदी 1-43, व्याकरण महाभाष्यं (नवाह्निकपर्यन्त) 1-6 | 25 |
| 13 | चित्सुखी 1-20, अद्वैतसिद्धि 1-13 | 25 |
| 14 | खण्डनखण्डखद्य 1-11, न्यायसिद्धान्तमुक्तावली 1-12 | 25 |

# लघुसिद्धान्तकौमुदी

## अथ संज्ञाप्रकरणम् :-

1. व्याक्रियन्ते शब्दान्व्युत्पद्यन्तेऽनेनेति व्याकरणम्।
2. इन्द्रश्चान्द्रः काशकृत्स्नापिशली शाकटायनः।
   पाणिन्यमरजैनेन्द्र-जयन्त्यष्टादि-शाब्दिकाः।।
   (न तु वैयाकरणाः - इति भावः)
3. ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम्।
   सारस्वतं चापिशलं शाकलं पाणिनीयकम्।। (एते नव वैयाकरणाः)।
4. मंगं शुभं लातीति मंगलं, तदनुकूलं आचरणं मंगलाचरणम्।
5. संबंधश्चाधिकारी च विषयश्च्च प्रयोजनम्।
   विनाऽनुबन्धं ग्रन्थादौ मंगलं नैव शस्यते।।

   ग्रन्थाध्ययनप्रवृत्तिप्रयोजकज्ञानानुकूलविषयत्वं अनुबन्धत्वं।
   तच्चतुष्टयं विना यथोक्तं मंगलं नैव शस्यते।।
6. ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा। क्षरत्यनोंकृतं पूर्वं पश्चाच्च विशीर्यते।।
7. कुमुदस्येयं-कौमुदी। सिद्धोऽन्तो=निर्णयो येषां ते सिद्धान्ताः।
   सिद्धान्तानां कौमुदीव कौमुदीति सिद्धान्तकौमुदी।
   लघ्वी चासौ सिद्धान्तकौमुदीति लघुसिद्धान्तकौमुदी।
8. पद्यस्य गद्यकरणं अव्यवस्थितपदानां व्यवस्थीकरणं वाऽन्वयः।
   स च द्विविधः-दण्डान्वयः खण्डान्वयश्च।

**दण्डान्वयः-**

कर्ता गौणकर्म गौणक्रिया मुख्यकर्म मुख्यक्रियेति क्रमेण व्यवस्थीकरणं। कर्तृ-कर्म-भाववाच्यानुसारेण पदानां व्यवस्थितिर्वा।
यथा :- अहं (वरदराजाचार्यः) शुद्धां गुण्यां सरस्वतीं देवीं नत्वा पाणिनीयप्रवेशाय लघुसिद्धान्तकौमुदीं करोमि।

**खण्डान्वयः-**

प्रतिज्ञापुरःसरम् प्रश्नप्रतिवचनेन शब्दानां व्यवस्थीकरणं। यथा :-
अहं लघुसिद्धान्तकौमुदीं करोमि - प्रतिज्ञावाक्यं।
किं कृत्वा ? नत्वा, किम् नत्वा ? देवीं, का च सा ? सरस्वतीम्। कथं भूताम् ? शुद्धां, पुनः कथं भूताम् ? गुण्याम्। कस्मै प्रयोजनाय ? पाणिनीयप्रवेशाय।

9. प्रयोजनमनुद्दिश्य मन्दोऽपि न प्रवर्तते। - न्यायः।

10. समाप्तिकामो (-प्राचीनाः) विघ्नध्वंसकामो (-नव्याः) वा मंगलमाचरेत् ।

11. नृत्तावसाने नटराजराजो ननाद ढक्कां नवपञ्चवारम्।
उद्धर्तुकामः सनकादिसिद्धानेतद्विमर्शे शिवसूत्रजालम्।।

12. अक्षरसमाम्नाय=वर्णसमाम्नायः - अक्षराणां वर्णानां वा सम्यक् आम्नायः = पाठः यस्मिन् स। चतुर्दश (14) सूत्राणि।

13. अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम्। अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुः।।

14. उक्तानुक्तदुरुक्तानां चिन्ता यत्र प्रवर्तते।
तं ग्रन्थं वार्तिकं प्राहुः वार्तिकज्ञा विचक्षणाः।।

15. सूत्रार्थो वर्ण्यते यत्र शब्दैः सूत्रानुवर्तिभिः।
समासानि च विगृह्य वृत्तिं वृत्तिविदो विदुः।। सूत्रस्यार्थविवरणं वा वृत्तिः।

17. सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुसारिभिः।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः।।

18. येनाक्षरसमाम्नायमधिगम्य महेश्वरात्।
कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः।।
अतः माहेश्वरसूत्राणि। प्रत्याह्रियन्ते संक्षिप्यन्तेऽस्मिन् वर्णा इति प्रत्याहारः। तदर्थत्वाच्च प्रत्याहारसूत्राणि।

19. स्वतन्त्रेच्छस्य मुनेः नियोगपर्यनुयोगकर्तुमशक्यत्वात्। णद्वयहद्वयविषये।

20. स्वर+अच्=स्वरः (आक्षेपार्थक धातोः), अथवा स्वयं राजन्ते राति वा प्रकाशन्ते अथवा स्वयमुत्पन्नः शब्दः स्वरः। वि+अञ्ज् (व्यक्तीकरणं) ल्युट् = व्यञ्जनम्।

अर्थात् अन्यसापेक्षाभिव्यक्तीकरणं व्यञ्जनम्। अत एवोक्तम् - नान्तरेणाचं व्यञ्जनस्योच्चारणं संभवति।

21. पञ्चपाठीव्याकरणम् – सूत्रपाठः, धातुपाठ,: गणपाठः, परिभाषापाठः, लिङ्गानुशासनञ्च।

22. संज्ञा च परिभाषा च विधिर्नियम एव च।
अतिदेशोऽधिकारश्च षड्विधं सूत्रलक्षणम्।।
1. शक्तिनियामकं सूत्रं संज्ञासूत्रम्।
2. अनियमे नियमकारिणीभाषा, कुव्यवस्थायां सुव्यवस्थासंपादकं सूत्रं वा परिभाषासूत्रम्।
3. अन्यस्य धर्मस्यान्यत्रारोपबोधकं सूत्रमतिदेशसूत्रम्।
4. अपूर्वार्थ (कार्य)बोधकं सूत्रं विधिसूत्रम्।
5. इतरनिवृत्तिफलकार्थबोधकं सूत्रं नियमसूत्रम्।
6. स्वदेशे वाक्यार्थशून्यत्वे सति परदेशे वाक्यार्थबोधजनकं सूत्रमधिकारसूत्रम्।

23. उपदेशाः
धातुसूत्रगणोणादि वाक्यलिङ्गानुशासनम्।
आगमप्रत्ययादेशाः उपदेशाः प्रकीर्तिताः।।
धातु –2228, सूत्र –3996, गण –291, उणादि–753, वाक्य= वार्तिक–6000, लिङ्गनुशासनम् –189। परिषाभा –134, शिक्षा–60, गणसूत्र –185(191)।।

24. इत्संज्ञकत्वं, इत्संज्ञायोग्यत्वं वा अनुबन्धत्वं।

25. उच्चारणाभावोऽदर्शनम्। शब्दाधिकारात्। नित्यत्वाच्च।

26. येन विना यदनुपपन्नं तत्तेनाक्षिप्यते। अर्थापत्तिप्रमाणम्।

27. यस्मात्पूर्वं नास्ति परमस्ति स आदिः, यस्मात्परं नास्ति पूर्वमस्ति सोऽन्तः। अन्ते भवः अन्त्यः । बुद्धिकृतसमुदायापेक्षमेतत्।

28. संज्ञा संज्ञिनं बोधयित्वा निवर्तते।

29. सर्वनामानि उत्सर्गतः प्रधानपरामर्शकाः।

30. एकमात्रो भवेद्ध्रस्वो द्विमात्री दीर्घ उ च्यते।
त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनञ्चार्धमात्रिकम्।।

31. चाषस्तु वदतैकमात्रां द्विमात्रं त्वेव वायसः।
शिखी रौती त्रिमात्रं नकुलञ्चार्धमात्रिकम्।।
चाष=नीलकण्ठपक्षी, वायस=कौआ, शिखी=मयूर, नकुल=नेवला।

32. प्रथमं वै नियम्येत कारणस्यानतिक्रमात्। बहुत्वं च = असति बाधके त्रिसंख्या।

33. कालेन यावता पाणिः पर्येति जानुमण्डले।
सा मात्रा कविभिः प्रोक्ता ह्रस्वदीर्घप्लुते मता।।
वामजनुनि तद्धस्तभ्रमणं यावता भवेत्।
कालेन मात्रा सा ज्ञेया मुनिभिर्वेदपारगैः।।

34. स्वरित 8 प्रकार–जात्या, अभिहित, क्षैप्र, प्रश्लिष्ट, तैरोव्यञ्जन, तैरोविराम, पादवृत्त, ताथाभाव्यश्च।

35. मूलस्वर – अ, इ, उ, ऋ, लृ।
सन्ध्यक्षर – ए, ओ, ऐ, औ। अ+इ=ए, अ+उ=ओ, अ+ए=ऐ, अ+ओ=औ।
केचित् ऋ = अ+र्+अ तथा अ+ल्+अ = लृ।

36. वेदपाठ 8 प्रकार–संहिता, पद, जटा, घन, स्वर, क्रम, माला, शिखा।

37 अ) नामाख्यतोपसर्गनिपाताः चतुर्विधा शब्दाः।

आ) सत्त्वाभिधायकं नाम क्रियावाचकमाख्यातम्।
उपसर्गो विशेषकृत् निपातः पादपूरणः।।

38.

| | | | | |
|---|---|---|---|---|
| **पद** – | नाम | आख्यात | उपसर्ग | निपात |
| **गोत्र**– | भार्गव | भारद्वाज | वासिष्ठ | कश्यप |
| **देवता**– | वायु | सोम | अग्नि | वरुण |

39.

| | | | | | | |
|---|---|---|---|---|---|---|
| **स्थान**– | कण्ठ | तालु | दन्त | ओष्ठ | मूर्धा | जिह्वामूलीयम्। |
| **देवता**– | अग्नि | सोम | रुद्र | अश्विन् | वायु | निर्ऋति। |

शेषवर्णों का विश्वेदेव देवता है–नासिक्य, कण्ठतालु, कण्ठोष्ठ, दन्तोष्ठ, उपध्मानीय, अनुस्वार, विसर्ग, दुःस्पृष्ट आदि।

40. पर्यायग्रहणे लाघवगोरवं नाद्रियते।

41. एकत्वावच्छिन्नप्रतियोगितकपर्याप्त्यनुयोगिताकवृत्तित्वं व्यासज्यवृत्तित्वं।

42. **वर्ण** – स्पर्श अन्तःस्थ ऊष्म अयोगवाह स्वर।
**देवता**– मृत्यु मृत्यु प्रजापति प्रजापति इन्द्र।

43. यद्यपि न विद्यन्ते योगो = उपदेशो = उच्चारणं वर्णसमाम्नाये येषां ते अयोगाः, तथापि वाहयन्ति प्रयोगान्निर्वाहयन्ति यस्मात्तस्मात् अयोगवाहाः।
ते च षट्–अनुस्वार, विसर्ग, जिह्वामूलीय, उपध्मानीय, दुःस्पृष्ट= ळ ह्ळ, यम।

44. अच्–स्वर वर्णों का बाह्य प्रयत्न – संवार नाद घोष।
उक्तञ्चैतद्‌भाष्ये –सुपां सुलुक्पूर्वसवर्णाच्छाडाड्यायाजालः(पा. सू. 7.1.39)।

45. स्पृशन्ति पूर्णतया स्वस्वस्थानमुच्चारणकाले ये वर्णा ते स्पर्शाः अर्थात् वायुना स्थानानि समग्रानि स्पृष्ट्वा ये वर्णा अभिव्यज्यन्ते ते स्पर्शाः। उच्चारणस्थान–मध्यादेव वायुना व्ययज्यन्ते ये वर्णा तेऽन्तर्मध्ये तिष्ठन्तीति कृत्वाऽन्तःस्थाः। ऊष्मा वायुः तत्प्रधानाः ऊष्माणः।

46. स्वबोधकत्वे सति स्वेतरबोधकत्वमुपलक्षणम्।

47. सानुस्वारश्च दीर्घश्च विसर्गी च गुरुर्भवेत्।
वर्णः संयोगपूर्वश्च तथा पादान्तगोऽपि वा।।

48. यः शिष्यते स लुप्यमानार्थाभिधायी।

49. व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणम्।

50. अर्धमात्राऽधिककालव्यवधानाभावत्वं सन्निधित्वं संहिता।

51. सजातीयानां मध्ये विजातीयानां प्रवेशोऽसह्यत्वात्।
न ह्यमूला जनश्रुतिरिति न्यायात्प्रमाणम्।।

## अथाच्सन्धिप्रकरणम् :

1. सन्धानमिति सन्धिः। सम्+धा+कि।
विपूर्वो धाः करोत्यर्थे अभिपूर्वस्तु भाषणे।
मेलने संपूर्वश्चापि निपूर्वः स्थापने मतः।।

2. संहितायाम् । 6.1.72–6.1.158 अधिकारः।

3. संहितैकपदे नित्या नित्या धातूपसर्गयोः।
नित्या समासे वाक्ये तु सा विवक्षामपेक्षते।।

4. असति बाधके प्रथमाया विधेयविभक्तिकत्वम्।।

5. 'तस्मिन्निति', 'तस्मादित्यु' - इति परिभाषाद्वयेनांशत्रयमुपस्थाप्यते। तद्यथा- अव्यवहितांश, षष्ठ्यंश, पूर्वत्व / परत्व अंशश्च।

6. शत्रुवदादेशा भवन्ति मित्रवच्चागमाः स्यात्।

7. आन्तर्य चतुर्धा - स्थानकृतं, अर्थकृतं, गुणकृतं, प्रमाणकृतञ्च।
यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यं बलीयः।

8. नञर्थ-प्रसज्य, पर्युदास।
प्रसक्तस्य साक्षात्प्रतिषेधः प्रसज्यः। क्रियान्वयी।
तद्भिन्नतत्सदृशग्राही पर्युदासः। उत्तरपदान्वयी।

9. अचं दृष्ट्वा त्वधो याति हलञ्चोपरि गच्छति।
अवसाने विसर्गः स्यात् रेफस्य च त्रिधा गतिः।।

10. अज्झीनं व्यञ्जनं परेण संयोज्यम्।

11. प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थ एव प्रधानम्।

12. स्वार्थेन परिपूर्णं पदं पदार्थान्तरेणोपसंक्रमते। अन्वयनियमः।

13. उद्देश्यवचनं पूर्वं विधेयं ततः परम्। कथं ? अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेत् - इति न्यायात्। अन्येन सिद्धस्य पुनः कथनमनुवादः। विधावेव परिभाषोप - तिष्ठते नानुवादे। साजात्ययोरेवावध्यवधिमतोर्नियमः।

14. प्रतिज्ञायत इति प्रतिज्ञा, अनुनासिकस्य भाव आनुनासिक्यं।
प्रतिज्ञा आनुनासिक्यं येषां ते प्रतिज्ञानुनासिक्याः पाणिनीयाः।
पाणिनिना प्रोक्तमधीयते विदन्ति वेति पाणिनीयाः।

15. सांप्रतिकाभावेऽपि भूतपूर्वगतिराश्रियते क्वचित्।

16. पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः।

17. मद्विषये यद्यत्प्राप्तं तत्तत्सर्वं मया बाध्यते - बाध्यसामान्यचिन्तापक्षः। मद्विषये यद्यत्प्राप्तं तेषां मध्ये किञ्चिन्मया बाध्यते किञ्चिन्मया न बाध्यते - बाध्यविशेष चिन्तापक्षः। पुरस्तादपवादा अनन्तरान् विधीन्बाधन्ते नोत्तरान्।

18. सम्भवव्यभिचाराभ्यां स्याद्विशेषणमर्थवत्। अनिर्दिष्टार्थकाः प्रत्ययाः स्वार्थे भवन्ति।

20. निपाताश्चादयो ज्ञेया उपसर्गास्तु प्रादयः। द्योतकत्वात्क्रियायोगे लोकादवगता इमे।।

21. धात्वर्थं बाधते कश्चित् कश्चित्तमनुवर्तते। तमेव विशिनष्ट्यन्यदुपसर्गगतिस्त्रिधा।

22. विकल्पवाचकत्वाद्रव्यवाचकत्वरूपसादृश्यविशिष्टक्रियावाचकत्वं धातुत्वं। भू = पृथिवीवाचकत्वबाधनार्थं वा, वा= विकल्पवाचकत्वबाधनार्थ भू; भू = सत्तयाम् वा = गतिगन्धनयोरित्यनयोरेव ग्रहणम्। आदिश्च आदिश्च आदी, भूवौ आदी येषां ते भूवादयः। तत्रैक आदि प्रकारवाची द्वितीयस्तु प्रभृतिवाचीति ध्येयम्।।

23. 'आकृत्या स्वरूपेण सदृशकार्यदर्शनेन गण्यते परिचीयते' इत्याकृतिगणः।

24. धातूपसर्गयोः कार्यमन्तरङ्गं। अन्यद् बहिरङ्ग।। असिद्धं बहिरङ्गमन्तरङ्गे।।
अल्पापेक्षमन्तरङ्ग बह्वपेक्षं बहिरङ्गं। कृताकृतप्रसङ्गी यो विधिः स नित्यः।।
येन नाप्राप्ते यो विधिरारभ्यते स तस्यापवादः, निरवकाशविधिर्वा।
आद्यन्ताभ्यां पृथगवस्थिताभ्यां धातुत्व-प्रातिपदिकत्व-निपातत्वोपसर्गत्व-पदत्वादयो ये व्यवहाराः ते कृतैकादेशस्यापि भवन्ति।

27. देवत्रातो गलो ग्राह इतियोगे च सद्विधिः। मिथस्ते न विभाषन्ते गवाक्षः संशितव्रतः।।

28. छिन्ने पुच्छे श्वा श्वैव, न गर्दभः।

29. स्वाभिमुखीकरणं सम्बोधनम्।

30. स्वाभाविकोच्चारणेनाबोध्यमानो विशेषयत्नकृतोच्चारणेन च बोध्यमानो जनो यत्र देशे तद्दूरं।

31. सन्नियोगशिष्टानां सह वा प्रवृत्तिः, सह वा निवृत्तिः। क्वचिदेकदेशोऽप्यनुवर्तते।

32. लिङ्गसंख्यान्वयित्वं द्रव्यत्वम्।

33. प्रातिस्विकविधिं बिना सिद्धप्रक्रियस्य निर्देशो निपातनम्।
अन्यादृशप्रयोगे प्राप्तेऽन्यादृशप्रयोगकरणं वा। अथवा
लक्षणं विनैव निपतति प्रवर्तते लक्ष्येष्विति।

34. तेन विना मर्यादा, तेन सह अभिविधिः।

35. माठरपरिवेषणन्यायेन सिद्धं - नेमौ रहौ कार्यिणौ द्विर्वचनस्य।

## अथ हल्सन्धिप्रकरणम्

1. स्थान्यादेशयोरेव यथासंख्यं, न तु निमित्तकार्यिणोः।
2. स्थानप्रयत्नाभ्यामन्तरतमे स्पर्शे चरितार्थोऽयं (अचो रहाभ्यां) विधिर्रेफे न प्रवर्तते। यूनि लब्धे युवतिर्जरठे रमते किमिति न्यायात्।
3. भाव्यमानेन सवर्णानां ग्रहणं न।
4. आनर्थक्यात्तदङ्गेषु - न्यायः। (जै.सू. 3.1.18 / अधि 3.1.9)।
5. परेणैवेण्ग्रहाः सर्वे पूर्वेणैवाण्ग्रहा मताः। ऋतेऽणुदित्सवर्णस्येत्येतदेकं परेण तु।।
6. अन्यत्रान्यत्र लब्धावकाशयोः शास्त्रयोरेकस्मिन्लक्ष्ये समावेशः तुल्यबल विरोधः। सिंहयोरेव युद्धं, न तु सिंहमशकयोरिति न्यायत्।
7. नियताक्षरविशिष्ट-तादिगणवत्त्वं पादत्वं। तत्र तादि अष्ट गणाः।

| | | |
|---|---|---|
| त ऽऽ1 | म ऽऽऽ | ऽ - गुरु |
| ज 1ऽ1 | य 1ऽऽ | 1 - लघु |
| भ ऽ11 | र ऽ1ऽ | |
| न 111 | स11ऽ | |

## अथ सुबन्ताः

1. पाति रक्षतीति पुमान् - पातेर्डुम्सुन् (उ० 4/179)।
2. लिङ्ग्यते परिचीयतेऽनेनेति - लिङ्गम्।
3. अर्थविषयकबोधजनकत्वमर्थवत्त्वं। वृत्तिमत्त्वं वा। वृत्तिश्च पञ्चधा कृत्तद्धितसमासैकशेषसनाद्यन्तधातवः। कथं - परार्थाभिधानं वृत्तिरिति तल्लक्षणम्।
4. प्रकृतिप्रत्ययसापेक्षार्थबोधजनकत्वं व्युत्पन्नत्वं। प्रकृतिप्रत्ययनिरपेक्षार्थबोधजनकत्वमव्युत्पन्नत्त्वं।
5. संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्तीति।
6. सर्वाणि नामानि धातुजानि भवन्ति कानिचिद्रूढान्यपि सन्ति - निरुक्तः।
7. 'प्रथमा' आदिसंज्ञाः पूर्वाचार्यैः कृता पाणिनिनाऽपि स्वीकृताः।

8. यत्रार्थवति संघाते पूर्वो भागस्तथोत्तरः।
स्वातन्त्र्येण प्रयोगार्हः समासस्यैव तस्य चेत्।।
(अत एव वाक्यस्य प्रातिपदिकसंज्ञा न)

9. प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्।

10. प्रत्ययग्रहणे तदन्ता ग्राह्या।

11. अयोगवाहानामकारस्योपरि शर्षु चोपसंख्यानम्।

12. अपदं न प्रयुञ्जीत, अत एव एकवचनमुत्सर्गः क्रियते।

13. विरम्यतेऽस्मिन् अनेन वा, विरमणं वा विरामः।
वर्णकर्तृकसत्ताऽभावः, वर्णोच्चारणक्रियाऽभावो वा।

14. पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते नोत्तरान्।

15. अतिदेश - छ प्रकार है। कार्य, धर्म, शास्त्र, निमित्त, स्वरूप और तादात्म्य।

16. स्थान्यवयवो योऽल्, तद्वृत्ति योऽल्त्वव्याप्यो धर्मः, तदवच्छिन्ननिमित्तताके विधौ न स्थानिवत्।

17. व्यवस्था = स्वस्य (पूर्वादिशब्दस्य) अभिधेयः (दिग्देशकालादिरूपोऽर्थः) तेनापेक्ष्य -माणोऽवधेर्नियमो यत्र सा।

18. इदमस्तु सन्निकृष्टे समीपतरवर्ति चैतदो रूपम्। अदसस्तु विप्रकृष्टे तदिति परोक्षे विजानीयात्।।

19. प्रकृतिप्रत्ययौ स्वार्थं ब्रूतः, न केवला प्रकृतिः प्रयोक्तव्या, न केवलः प्रत्ययः।

20. षष्ठीप्रकृतिजन्यप्राथमिकोपस्थितिविषयत्वं निर्दिश्यमानत्वं।

21. क्विप्विज्विडन्ताः शब्दा धातुत्वं न जहति।

22. सकृद्गतौ विप्रतिषेधे यद् बाधितं तद्बाधितमेव।

23. अवी-तन्त्री-तरी-लक्ष्मी-धी-ह्री-श्रीणामुणादितः।
अपि स्त्रीलिङ्गवृत्तीनां सोर्लोपो न कदाचन।।

24. सिद्धे सत्यारभ्यमाणो विधिर्नियमार्थः। अमुख्ये मुख्यसम्प्रत्ययः व्यपदेशिवद्भावः।

26. निमित्तापाये नैमित्तिकस्याप्यपायः।

27. अन्योन्याश्रयाणि कार्याणि न प्रकल्पन्ते।

28. भावीसंज्ञाविज्ञानात् - न्यायः। अस्य (वाह उठ्) सूत्रस्य संप्रसारणसंज्ञा शाटकं वयेतिवद्।

29. उच्चारणार्थानामित्संज्ञालोपं विनैव निवृत्तिः।

30. षष्ठीनिर्दिष्टषष्ठ्यन्तपदवाच्योऽर्थवान् अथवा समुदायोऽर्थवान्, समुदायैकदेशोऽनर्थवान्।

31. नानुबन्धकृतमनेकाल्त्वम्।

32. काचं मणिं काञ्चनमेकसूत्रे ग्रथ्नासि बाले किमिदं विचित्रम्।

विचारवान् पाणिनिरेकसूत्रे श्वानं युवानं मघवानमाह।।

33. एकतिङ् वाक्यम्। एकतिङन्तार्थमुख्यविशेष्यकबोधजनकं।

34. जक्षिजागृदरिद्राशास्दीदीङ्वेवीङ्चकासृ च।
अभ्यस्तसंज्ञं विज्ञेयं मुन्युक्तं धातुसप्तकम्।।

35. न दस्यते प्रोत्क्षिप्यतेऽङ्गुलिर्यत्र स 'अदस्' शब्दवाच्यः।

।। इति पूर्वार्धः ।।

# अथ उत्तरार्धम्

## तिङन्त=आख्यात=करोतिप्रकरणम्।

1. तिङ्=कालादिवाचकप्रत्ययाः।
2. समारब्धक्रियायाः परिसमाप्तिपर्यन्तव्यापकक्रियाश्रयकालत्वं वर्तमानत्वं।
3. परिनिवृत्तक्रियाव्यापककालत्वं भूतकालत्वम्।
4. भाविक्रियाव्यापककालत्वं भविष्यत्त्वम्।
5. वर्तमानस्य पूर्वोत्तरकालीनप्रायोऽविस्मृतक्रियाव्यापककालत्वं अद्यतनत्वम्।
6. प्रायो विस्मृतश्चेत् अनद्यतनत्वम्।
7. स्वस्वेतरकृतापरिदृष्टकर्तृनिरूपितक्रियाव्यापककालत्वं परोक्षत्वम्।
प्रयोक्तुरिन्द्रियागोचरत्वं वा।
8. फलव्यापारौ धात्वर्थौ।
9. यमुद्दिश्य क्रियां क्रियते तत्फलम्।
10. फलसिद्ध्यर्थं परिस्पन्दविशिष्टं यत्क्रियते तद्व्यापारः।
11. व्यापाराश्रयत्वं कर्तृत्वम्, फलाश्रयत्वञ्च कर्मत्वम्।
12. अपरिस्पन्दरूपो धात्वर्थो व्यापारो भावः।
13. क्रियाप्रकारत्वं वाच्यत्वं, तत्त्रिविधं–कर्तृ, कर्म, भावश्चेति।
14. फलव्यधिकरणव्यापारवाचकत्वं सकर्मकत्वम्।
15. फलसमानाधिकरणव्यापारवाचकत्वं अकर्मकत्वम्।
16. प्रथमान्तो यदा कर्ता द्वितीया कर्मणस्तदा। (कर्तृवाच्यः)
यदा कर्ता तृतीयान्तः प्रथमा कर्मणस्तदा।। (कर्मवाच्यः)
यदा कर्ता तृतीयान्तः नास्ति वै कर्मणस्तदा। (भाववाच्यः)
यथा क्रमशः –देवदत्तः ग्रामं गच्छति। देवदत्तेन ग्रामः गम्यते। देवदत्तेन भूयते।

17. समानविभक्तिकत्वं समानार्थकत्वं वा समानाधिकरणत्वम्।
18. विशेषं = भेदं करोतीति विकरणः।
20. भृत्यादेर्निकृष्टस्य प्रवर्तनम् विधिः।
21. आवश्यके श्राद्धभोजनादौ दौहित्रादेः प्रवर्तनम् निमन्त्रणम्।
22. कामचारानुज्ञा आमन्त्रणम्।
23. सत्कारपूर्वको व्यापारोऽधीष्टः।
24. संप्रधारणम् स्वजिज्ञासाविषये संप्रश्नः।
25. याचना प्रार्थना।
26. उपसर्गेण धात्वर्थो बलादन्यत्र नीयते। प्रहाराहारसंहाविहारपरिहारवत्।।
27. सन्क्यच्काम्यच्क्यङ्क्यषोऽथाचारक्विब्णिज्यङस्तथा।
यगायेयङ्णिङ्चेति द्वादशामी सनादयः।।
28. अजन्तोऽकारवान्वा यस्तास्यनिट् थलि वेडयम्।
ऋदन्त ईदृङ् नित्यानिट् क्राद्यन्यो लिटि सेड्भवेत्।।
29. बहुव्रीहिर्द्विविधः -तद्गुणसंविज्ञानः, अतद्गणसंविज्ञानश्च।
तस्यान्यपदार्थस्य प्रधानीभूतस्य गुणाः विशेषणानि संविज्ञायन्ते क्रियान्वयितया ज्ञायन्ते यत्र स तद्गुणसंविज्ञानः।
तस्यान्यपदार्थस्य प्रधानीभूतस्य गुणाः विशेषणानि न संविज्ञायन्ते क्रियान्वयितया न प्रतीयन्ते यत्र सोऽतद्गुणसंविज्ञानः।
30. ऊदृदन्तैर्यौतिरुक्ष्णुशीस्नुनुक्षुश्विडीङ्श्रिभिः।
वृङ्वृञ्भ्यां च विनैकाचोऽजन्तेषु निहताः स्मृताः।
31. अनुदात्ता हलन्तेषु धातवस्त्र्यधिकं शतम्।
32. एकाऽपि सप्तमिर्विषयभेदाद्भिद्यते।
33. तिङन्तसामान्य - करोतिप्रकरणम्।
णिजन्त - कारितप्रकरणम्।
यङन्त - चेक्रीतप्रकरणम्।
यङ्लुगन्त - चर्करीतप्रकरणम्।
सन्नन्त - चिकीर्षितप्रकरणम्।
34. धातुषु यत्र रेफाण्णकारः दृश्यते सो णकारः नकारस्थानिक इति ज्ञेयं। तथा -

नकारजावनुस्वारपञ्चमौ झलि धातुषु।
सकारजः षकारश्च षाट्टवर्गस्तवर्गजः।।

| 35. | **अनुबन्धः** | **प्रयोजनम्** | **सूत्रम्** |
|---|---|---|---|
| 1. | अ उदात्त | परस्मैपदम् | शेषात्कर्तरि परस्मैपदम् |
| 2. | अ अनुदात्त | आत्मनेपदम् | अनुदात्तङित आत्मनेपदम् |
| 3. | अ स्वरित | उभयपदम् | स्वरितञितः कर्त्रभिप्राये क्रियाफले |
| 4. | आ | निष्ठायामिडभावः | आदितश्च |
| 5. | इ | नुमागमः | इदितो नुम् धातोः |
| 6. | इर् | लुङि च्लेरङ् वा | इरितो वा |
| 7. | ई | निष्ठायामिडभावः | श्वीदितो निष्ठायाम् |
| 8. | उ | क्त्वो वा 'इट्' | उदितो वा |
| 9. | ऊ | वा 'इट्' | स्वरतिसूतिसूयतिधूञूदितो वा |
| 10. | ऋ | उपधाया ह्रस्वाभावः | वाग्लोपिशास्वृदिताम् |
| 11. | ऌ | लुङि च्लेरङ् | पुषादिद्युतादिऌदितः परस्मैपदेषु |
| 12. | ए | लुङि वृद्धिनिषेधः | ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम् |
| 13. | ओ | निष्ठायाः तस्य नकारः | ओदितश्च |
| 14. | ङ् | आत्मनेपदम् | अनुदात्तङित आत्मनेपदम् |
| 15. | ञ् | उभयपदम् | स्वरितञितः कर्त्रभिप्राये क्रियाफले |
| 16. | ञि | वर्तमाने क्तः | ञीतः क्तः |
| 17. | टु | अथुच् प्रत्ययविधिः | ट्वितोऽथुच् |
| 18. | डु | क्त्रि प्रत्ययविधिः | ड्वितः क्त्रिः |
| 19. | ष् | भावे अङ् प्रत्ययः | षिद्भिदादिभ्योऽङ् |

36. संप्रसारणं तदाश्रयञ्च कार्यं बलवत्।

37. यजिर्वपिर्वहिश्चैव वसिर्वेञ्व्येञित्यपि।
ह्वेञ्वदी श्वयतिश्चेति यजाद्याः स्युरिमे नव।।

38. गापाविह इणादेशपिबती गृह्येते। गातिस्थाघुपाभूभ्यो........(2.4.77) वा।

39.क) राघव स्य शरैर्घोरैर्घोरं रावणमाहवे।
अत्र क्रियापदं गुप्तं यो जानाति स पण्डितः।।

हे राघव=सम्बोधनम्, स्य-षो अन्त:कर्मणि धातो: लोट्लकारमध्यम-पुरुषैकवचनरूपं, न तु षष्ठ्येकवचनप्रत्यय:।

ख) प्रात: प्रात: समुत्थाय द्वौ मुनी च कमण्डलू।
अत्र क्रियापदं गुप्तं यो जानाति स पण्डित:।।
अत्र प्रात: = प्रात: कालवाची, प्रात:-प्रा इत्यस्माद्धातो: प्रथमपुरुषद्विचन-प्रत्यय: तस्, तदन्तरूपं तिङन्तम्।

40. संज्ञापूर्वको विधिरनित्य:।

41. प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च - अनेन णिच्, पुंवद्भाव-रभाव-टिलोप-विन्मुतब्लोप-यणादिलोप-प्रस्थस्फाद्यादेश-भसंज्ञा च इष्ठवत्स्यु:।

42. णिच्यचादेशो न भवति द्वित्वे कर्तव्ये।

43. कण्ड्वादयो द्विविध: - धातु:, प्रातिपदिकञ्च।

## अथ कृदन्तप्रकरणम्:-

1. क्वचित्प्रवृत्ति: कचिदप्रवृत्ति: क्वचिद्विभाषा क्वचिदन्यदेव।
विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति।।

2. धात्वर्थभावो द्विविध:-साध्यावस्थाऽऽपन्न:, सिद्धावस्थाऽऽपन्नश्च।
प्रथमस्तु तिङन्त:, द्वितीयस्तु कृदन्त: - प्रायश:।

3. कृदभिहितार्थो भावो द्रव्यवत्प्रकाशते।

## अथ कारकप्रकरणम्:-

1. पञ्चकं प्रातिपदिकार्थ:-स्वार्थ (जाति), द्रव्य (व्यक्ति), लिङ्ग, संख्या और कारक।

2. यस्मिन् प्रातिपदिके उच्चारिते यस्यार्थस्य नियमेनोपस्थिति: सोऽत्र प्रातिपदिकार्थो विवक्षित:।

3. विभक्तिश्च द्विविध: - कारकविभक्ति:, उपपदविभक्तिश्च।

4. उपपदविभक्ते: कारकविभक्तिर्बलीयसी।

5. द्वन्दादौ द्वन्द्वमध्ये द्वन्द्वान्ते च श्रूयमाणं पदं प्रत्येकमभिसंबध्यते। यथा - तुल्यास्यप्रयत्नं सवर्ण, अन्त: शब्दस्याङ्किविधिणत्वेषूपसंख्यानम्, सुप्तिङन्तं पदम्।

6.




7. क्रियाजनकत्वं क्रियान्वयित्वं वा कारकत्वम्।

8. तिङ्कृत्समासैरनुक्ते कर्मादौ द्वितीयादिर्भवति।

9. यद्यपि द्विष्ठः सम्बन्धः तथापि षष्ठयुत्पत्तिस्तु भेदकात् (विशेषणात्)।

10. आधारश्च त्रिविधः - औपश्लेषिकः, वैषयिकः, अभिव्यापकश्च।
यथा क्रमशः - वृक्षेषु गावः शेरते, मोक्षे इच्छाऽस्ति, सर्वस्मिन्नात्माऽस्ति।

11. उप = समीपे, श्लेषः = सम्बन्धः, तत्र भवः औपश्लेषिकः।
अप्राप्तिपूर्वकप्राप्तिरूपसंयोगसमवायातिरिक्तसम्बन्धेन यदधिकरणं तद्वैषयिकम्।
यत्र सर्वावयवावच्छेदेन व्याप्तिः तत्राभिव्यापकः।

## अथ समासप्रकरणम्:-

1. यत्रार्थवति संघाते पूर्वो भागस्तथोत्तरः। स्वातन्त्र्येण प्रयोगार्हः समासस्यैव तस्य चेत्।।
अतः समासस्यैव प्रातिपदिकसंज्ञा, न वाक्यस्य।

2. समसनं = संक्षेपकरणं = समासः।

3. स च पञ्चविधः- केवलः, अव्ययीभावः, तत्पुरुषः, बहुब्रीहिः, द्वन्द्वश्च।

4. पदानां परस्परसाकांक्षता सामर्थ्यम् - स द्विविधः।
व्यपेक्षा, एकार्थीभावश्च। प्रथमस्तु वाक्ये, द्वितीयः समासे।

5. परार्थाभिधानं वृत्तिः। वृत्त्यर्थावबोधकं वाक्यं विग्रहः। स च लौकिकोऽलौकिकश्च।

कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः पञ्च वृत्तयः।

6. समासस्य त्रीणि फलानि सन्ति। एकपदसिद्धिः विभक्तिलोपः, एकस्वरसिद्धिश्च।
7. प्रायेणाविग्रहो प्रायेणास्वपदविग्रहो वा नित्यसमासः।
8. सहेत्यव्ययेन ये समासाः क्रियन्ते तत्रालौकिकविग्रहवाक्येषु तृतीयाविभक्तिरेव प्रयोक्तव्या, सहयुक्तेऽप्रधाने इति विधानात्।
9. उत्तरपदे परतो यौ द्वन्द्वतत्पुरुषौ तयोर्नित्यत्वं वक्तव्यम्।
10. तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता। अप्राशस्त्यं विरोधश्च नञर्थाः षट्प्रकीर्तिताः।।
11. प्रसज्यप्रतिषेधोऽयं क्रियया सह यत्र नञ्। पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ्।
12. यत्क्रियायुक्ता प्रादयः तं प्रत्येव गत्युपसर्गसंज्ञकाः।
13. गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्पत्तेः।
14. सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः।
15. द्विगुः स्त्रियां च (लि.सू. 133)। चान्नपुंसकत्वं। अथवा अकारान्तोत्तरपदद्विगुः स्त्रियामेवेष्टः।
16. सिद्धं त्वधिकान्ता संख्या संख्यया समानाधिकरणाधिकारेऽधिकलोपश्च।
17. यन्निमित्तमुपादाय पुंसि शब्दः प्रवर्तते। क्लीबवृत्तौ तदेव स्यादुक्तपुंस्कं तदुच्यते।। पीलुर्वृक्षः फलं पीलु पीलुने न तु पीलवे। वृक्षे निमित्तं पीलुत्वं तज्जत्वं तत्फले पुनः।।
18. परस्परनिरपेक्षस्यानेकस्यैकस्मिन्नन्वयः समुच्चयः। अन्यतरस्यानुषङ्गिकत्वेना-न्वयः अन्वाचयः। मिलितानामन्वयः, इतरस्येतरेण योगः सम्बन्धो वा, यत्रानेकस्यार्थस्य मिलितस्येतरान्वयो वा स इतरेतरयोगः। समूहः समाहारः।
19. 'पितुर्दशगुणा माता गौरवेणातिरिच्यते' स्मृत्यनुसारेण तथा 'अभ्यर्हितञ्चे'ति वार्तिकेनैकशेषसमासस्याभावपक्षे 'मातापितरौ' इत्येव, समासश्चेत् 'पितरौ' इत्येव 'पिता मात्रा' इति सूत्रेण विकल्पनात्।

## अथ तद्धितप्रकरणम्

1. तेभ्यः सुबन्तेभ्यः प्रयोगेभ्यो हिताः - तद्धिताः।
2. ऋषयो मन्त्रद्रष्टारः। कथं?
   सर्गादिसमये वेदान्सेतिहासान्महर्षयः। लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवा।।
3. चतुर्णामर्थानां समाहारः चतुरर्थी, तत्र भवाः चातुरर्थिकाः।

चतुर्णां सूत्राणामर्थाः चतुरर्था, तत्र भवाः चातुरर्थिका वा।।

4. कणश आदानम् उञ्छवृत्तिः। मधुकरवद्भिक्षाग्रहणं माधुकरी वृत्तिः।
वर्षावद्प्रारब्धकर्मवशात्प्राप्तभिक्षाग्रहणं आकाशवृत्तिः।
अजगरवत्स्वतः प्राप्तग्रहणं अजगरवृत्तिः।।

5. शब्दाः चतुर्विधाः। यौगिकः, रूढः, योगरूढः, यौगिकरूढश्च। तद्यथा क्रमशः –
अवयवार्थसापेक्षसमुदार्थको योगरूढः – पंकजः।
अवयवार्थनिपेक्षसमुदार्थको रूढः – गौः।
अवयवार्थमात्रापेक्षको यौगिकः – पाचकः।
अवयवार्थसमुदार्थपरस्परनिरपेक्षः स्वतन्त्र एव विशिष्टार्थबोधको यौगिकरूढः – उद्भिद् = वृक्षः, यागविशेषश्च।

6. 'विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसंख्ययोः।' तथा 'तासु चानवतेः स्त्रियः।' – अमरकोशः।

7. जन्मना ब्राह्मणो ज्ञेयः, संस्कारैर्द्विजमेव च। विद्यया याति विप्रत्वं, त्रिभिः श्रोत्रियमुच्यते।।

8. भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने। संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः।।

9. गुणे शुक्लादयः पुंसि, गुणिलिङ्गस्तु तद्वति।

10. प्रकृतिजन्यबोधे प्रकारीभूतो धर्मो भावः।

11. समुच्चरितस्य ध्वनेः तथैव पुनरुच्चारणं अनुकरणम्।
अनुकरणानुकार्ययोर्भेदार्भेदपक्षद्वयमस्ति।
भेदपक्षे – शक्त्या बोधः, अभेदपक्षे – सादृश्यात् बोधः।

## अथ स्त्रीप्रत्ययप्रकरणम्

1. स्तनकेशवती स्त्री स्याल्लोमशः पुरुषः स्मृतः। – व्याकरणे न सम्मतः।

2. लिङ्गज्ञानं कोशादितः शिष्टप्रयोगादिभिरेव च।

3. अद्रवं मूर्तिमत्स्वाङ्गं प्राणिस्थमविकारजम्।
अतत्स्थं तत्र दृष्टञ्च तेन चेत्तत्तथायुतम्।।
स्पर्शवद् द्रव्यं परिमाणयुतम् मूर्तिः।

4. आकृतिग्रहणा जातिर्लिङ्गानां च न सर्वभाक्।
सकृदाख्यातनिर्ग्राह्या गोत्रञ्च चरणैः सह।।

।। हरिः ॐ तत्सत्।।

| | प्रकाशित पुस्तकों की सूची | |
|---|---|---|
| 1 | शिवपूजापद्धतिप्रकाशः | मुफ्त |
| 2 | पूर्णयोगः (योगपंचदशी) | 100 |
| 3 | सर्वदर्शनसारः | 175 |
| 4. | श्रीचक्रपूजापद्धतिप्रकाशः | 250 |
| 5. | वास्तुपूजापद्धतिप्रकाशः | 120 |
| 6. | शक्तिमहिम्नःस्तोत्रम् | 120 |
| 7. | दुर्गापूजापद्धतिप्रकाशः | 250 |
| 8. | दुर्गाहोमविधिः | 250 |
| 9. | उणादिकोशः | 30 |
| 10. | शक्तिमहिम्नःस्तोत्रम् (मूलमात्रम्) | मुफ्त |
| 11. | शिव-शक्तिमहिम्नःस्तोत्रम् (मूलमात्रम्) | मुफ्त |
| 12. | An Advatik View of Kantian Thoughts | 560 |
| 13. | Holistic Yoga | 220 |
| 14. | Wisdom of Yoga | मुफ्त |
| 15. | अनुभूत अनुष्ठान प्रकाशः | 300 |
| 16. | लघुसिद्धान्तकौमुदी टिप्पणसंग्रहः | 20 |
| 17. | तर्कसंग्रहः टिप्पणसंग्रहः | 10 |
| 18. | अर्थसंग्रहः टिप्पणसंग्रहः | 10 |
| 19. | भागवतपीयूषबिन्दुः | 300 |
| 20. | यतिदण्डैश्वर्यविधानम् (2 खण्ड) | 1000 |

